## ॥ अथ द्विरुक्तप्रकरणम् ॥



### २१३९ । सर्वस्य द्वे । (८ १. १)

इत्यधिकृत्य ।

### २१४० । नित्यवीप्सयोः । (८. १. ४)

आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्विर्वचनं स्यात् । आभीक्ष्ण्य तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च । पचति पचति । भुक्त्वा भुक्त्वा । वीप्सायां, वृक्षं वृक्षं सिञ्चति । ग्रामो ग्रामो रमणीयः । 'आभीक्ष्ण्ये णमुल् च' (सू. ३३४३) इत्यत्र चकारात् क्त्वा च ।

भट्टिकाव्ये—V. 51.

> स्थायं स्थायं क्वचिद्यान्त क्रान्त्वा क्रान्त्वा स्थितं क्वचित् ।
> वीक्षमाणो मृग रामश्चित्रवृत्तिं विसिष्मिये ॥ 1934 ॥

स्थायं स्थायं पुन. पुनः स्थित्वा । णमुल् । द्विर्वचनम् । पौन.पुन्यमाभीक्ष्ण्यम् । क्रान्त्वा क्रान्त्वा । चकारात् क्त्वा ।

भट्टिकाव्ये—XXII. 11.

> स्यन्त्वा स्यन्त्वा दिवश्शम्भोर्मूर्ध्नि स्कन्त्वा भुवं गताम् ।
> गाहितासेऽथ पुण्यस्य गङ्गा मूर्तिमिव द्रुताम् ॥ 1935 ॥

स्यन्त्वा स्यन्त्वा श्रुत्वा श्रुत्वा । चकारात् क्त्वा । आभीक्ष्ण्ये द्विर्वचनम् ।

भट्टिकाव्ये—XVIII 27.

> शमं शमं नभस्वन्तः पुनन्ति परितो जगत् ।
> उज्जिहीषे महाराज त्वं प्रशान्तो न किं पुनः ॥ 1936 ॥

शमं शमं शान्त्वा शान्त्वा । आभीक्ष्ण्ये णमुल् । अनेन द्विर्वचनम् ।

अस्मिन्नेव ग्रन्थे श्लो० 16 मत्तमत्तनयनमिति पाठे मत्तमत्ते नयने अभीक्ष्णमत्ते ।

नैषधे—V. 33.

शैशवव्ययदिनावधि तस्या यौवनोदयिनि राजसमाजे ।
आदरादहरहः कुसुमेषोरुल्ललास मृगयाभिनिवेशः ॥ 1937 ॥

अहरहः प्रत्यहम् । वीप्सायां द्विर्भावः । अत्यन्तसयोगे द्वितीया ।

नैषधे—I. 132.

पदे पदे सन्ति भटा रणोद्भटा न तेषु हिंसारस एष पूर्यते ।
धिगीदृशं ते नृपतेः कुविक्रमं कृपाश्रये यः कृपणे पतत्रिणि ॥ 1938 ॥

पदे पदे सर्वत्र । वीप्साया द्विर्भावः ।

मेघसंदेशे—I. 13.

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
सन्देशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयम् ।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसा चोपभुज्य ॥ 1939 ॥

खिन्नः खिन्नः अभीक्ष्ण क्षीणबलस्सन् । नित्यार्थे द्विर्भावः कृदन्तत्वात् । क्षीणः क्षीणः । पूर्ववत् ।

मेघसंदेशे—I 9.

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वा
वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ 1940 ॥

मन्दं मन्दमतिमन्दमित्यर्थः । मन्दशब्दः कृदन्तो न । अत्र कथञ्चिद्वीप्साया मेव द्विरुक्तिर्निर्वाह्या । प्रकारे गुणवचनस्य' (सू. 2147) इति तदाश्रयणे कर्मधारयवद्भावेन सुब्लुकि मन्दमन्दमिति स्यात् ।

चम्पूरामायणे—I. 26.

मन्दमन्दमपयद्दलित्वया गाधताविषयनाभिगह्वरा ।
कोसलेन्द्रदुहितुश्शनैरभून्मध्ययष्टिरपि दृष्टिगोचरा ॥ 1941 ॥

मन्दमन्दं मन्दप्रकारम् । 'प्रकारे गुणवचनस्य च' (सू. 2147) इति द्विर्भावः ।

२१४१ । परेर्वर्जने । (८. १. ५)

परि परि वङ्गेभ्यो वृष्टो देव । वङ्गान्परिहृत्येत्यर्थः ।

वा० । परेर्वर्जने वावचनम् । (4683.)

परि वङ्गेभ्यः । 'अपपरी वर्जने' (सू. 596) इति कर्मप्रवचनीयत्वम् । 'पञ्चम्यपाङ्परिभिः' (सू. 598) इति तद्योगे पञ्चमी । 'अपपरिबहिरञ्चवः पञ्चम्या' (सू. 666) इति समास. । पर्युदधि । द्विर्भावे समासो न । परिपर्युदधेः ।

अस्मिन्नेव ग्रन्थे श्लो० 434. उदधेः परि परि उदधिं वर्जयित्वा । असमासपक्षे 'परेर्वर्जने' इति द्विर्वचनम् ।

२१४२ । उपर्यध्यधसस्सामीप्ये । (८. १. ७)

'उभसर्व' (वा. 1444. सू. 544) इति द्वितीया । उपर्युपरि ग्रामम् । ग्रामस्योपरिष्टात्समीपकाले दुःखमित्यर्थ. । अधोऽधो लोकं लोकस्याधस्तात्समीपे देश इत्यर्थः ।

अस्मिन्नेव ग्रन्थे ग० 282. पुष्करावर्तकानुपर्युपरि । द्विरुक्तिः । तद्योगे द्वितीया ।

अस्मिन्नेव ग्रन्थे श्लो० 281. दृषदस्तटीः उपर्युपरि दृषदां समीपोपरिप्रदेशे । द्विर्भावे तद्योगाद्द्वितीया । यथाह वामनः 'उपर्यादिषु सामीप्ये द्विरुक्तेषु द्वितीया' इति ।

अस्मिन्नेव ग्रन्थे श्लो० 283. पयोधरानधोऽधः । मेघानां समीपाधःप्रदेशे । द्विर्भावः । 'उभसर्व' (वा. 1444. सू. 544) इति तद्योगे द्वितीया ।

२१४३ । वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु ।
(८. १. ८)

असूयायाम्, सुन्दर सुन्दर वृथा ते सौन्दर्यम् । संमतौ, देव देव वन्द्योऽसि । कोपे, दुर्विनीत दुर्विनीत इदानीं ज्ञास्यसि । कुत्सने, धानुष्क धानुष्क वृथा ते धनुः । भर्त्सने, चोर चोर घातयिष्यामि त्वाम् ।

२१४४ । एकं बहुव्रीहिवत् । (८. १. ९)

द्विरुक्त एकशब्दो बहुव्रीहिवत्स्यात् । एकैकमक्षरम् ।

भट्टिकाव्ये—XIV. 29.

कोट्या कोट्या पुरद्वारमेकैकं रुरुधे द्विषाम् ।
षट्त्रिंशद्धरिकोट्यश्च निवव्रुर्वानराधिपम् ॥ 1942 ॥

अस्मिन्नेव ग्रन्थे श्लो० 504. एकैकस्मिन्नहनि । एकमेकमित्यत्र बहुव्रीहिवन्न ।

२१४७ । प्रकारे गुणवचनस्य । (८. १. १२)

सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारयवत् । पटुपट्वी । पटुपटुः । पटुसदृश. । ईषत्पटुरिति यावत् । शुक्लशुक्लं रूपम् । शुक्लशुक्ल. पटः ।

वा० । संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः । (5056)

सर्प. सर्पः बुध्यस्व बुध्यस्व । सर्पः सर्प. सर्पः बुध्यस्व बुध्यस्व बुध्यस्व ।

वा० । क्रियासमभिहारे च । (4665.)

लुनीहि लुनीहीत्येवायं लुनाति ।

वा० । कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये, समासवच्च बहुलम् । (4700.)

बहुलग्रहणात् अन्यपरयोर्न समासवत् । इतरशब्दस्य तु नित्यम् ।

वा० । स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः । (4701.)

मेघसन्देशे —I. 14

अद्रे शृङ्ग हरति पवन. किस्विदित्युन्मुखीभि-
दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभि ।
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुख ख
दिङ्नागाना पथि परिहरन् स्थूलहस्तावलेपान् ॥ 1943 ॥

**चकितचकितं** चकितप्रकारं यथा भवति तथा । द्विर्भाव· ।

अस्मिन्नेव ग्रन्थे श्लो० 1941. **मन्दमन्दं** मन्दप्रकारम् ।

किरातार्जुनीये—XVIII. 41

अणीयसे विश्वविधारिणे नमो
नमोऽन्तिकस्थाय नमो दवीयसे ।
अतीत्य वाचां मनसां च गोचरं
स्थिताय ते तत्पतये **नमो नमः** ॥ 1944 ॥

ते तुभ्य **नमो नमः** । 'चापले द्वे भवत इति वक्तव्यम्' इति द्विरुक्तिः । म्भ्रमेण प्रवृत्तिश्चापलम्' इति काशिका ।

अनर्घराघवे-—VII 117.

त्रिपुरहरकिरीटक्रीडितै. क्रीडयद्भि-
र्भुवनममृतभानोर्बालमित्रैः पयोभि. ।
सगरसुतचितायाः पावनीतोयराशे-
**रियमियम**घमग्रे जाह्नवी निह्नुते न ॥ 1945 ॥

**इयमियम्** । 'सम्भ्रमे द्वे भवतः' इति द्वित्वम् ।

भट्टिकाव्ये—XX. 29

त्वं **पुनीहि पुनीही**ति पुनन्वायो जगत्त्रयम् ।
चरन् देहेषु भूताना विद्धि मे बुद्धिविप्लवम् ॥ 1946 ॥

हे वायो **पुनीहि पुनीही**ति जगत्त्रय पुन· पुन. पुनामि भृशं वा पुनामी-त्यभिप्राय. । त्वं जगत्त्रयं पुनन् 'क्रियासमभिहारे लोट्' (सू 2825) इति लोट् ।

अस्मिन्नेव ग्रन्थे श्लो० 307. यथायथ यथास्वम्। यथागतमिति पाठे यतो यतस्तत्पादुत्थायागताः। 'यथाऽसादृश्ये' (सू 661) इति वीप्सायामव्ययीभावः।

२१५०। द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु। (८. १. १५)

द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते एष्वर्थेषु।

रघुवंशे—VII. 14.

परस्परेण स्पृहणीयशोभं
न चेदिदं द्वन्द्वमयोजयिष्यत्।
अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजाना वितथोऽभविष्यत्॥ 1948॥

॥ इति द्विरुक्तप्रकरणम्॥

इति सोदाहरणश्लोकायां पाणिनिसूत्रव्याख्यायां
पूर्वार्धं समाप्तम्।

